दाहोपशमनोपाय चरके—

प्रिया प्रदक्षिणाचारा प्रमदाश्चन्दनोक्षिता । सान्त्वयेयु परं कामैर्मणिमौक्तिकभूषणा ॥
च चि अ ३ ॥

हिन्दी—कृशोदरी स्त्रियों, योग्य पुत्रों, हितैषी मित्रों, देवतोपासनादिसच्चरित्रों, विविध प्रकार के फुहारे वाले घरों, विकसित कमलों तथा सुशोभित सरोवरों के सेवन से तीव्रदाह शान्त हो जाता है ॥ ३३ ॥

लीलावलोकनविलोलविलोचनानाम्-
मुक्तालताऽऽकुलकुचस्थलमञ्जुलानाम् ।
सन्दिग्धमुग्धवचसां सुविलासिनीनाम्-
आलिङ्गनं सकलदाहमपाकरोति ॥ ३४ ॥

व्याख्या—लीलावलोकनविलोलविलोचनाना लीलया हावभावादिकेन अवलोकन प्रेक्षण तत्र विलोले चञ्चले विलोचने नेत्रे यासां तासाम्, पुन कीदृशीना मुक्तालताऽऽकुलकुचस्थलमञ्जुलानाम् मुक्तालताभि मौक्तिकमालाभि आकुलाव्याप्ता कुचस्थली स्तनपरिधि अतएव मञ्जुला सुन्दर्य यासा तासाम्, पुन कीदृशीना सन्देहेन युक्त सन्दिग्धम् अतएव मुग्ध मनोहर वच वचन यासा तासाम् सुविलासिनीना लीलावतीना यद् आलिंगनम् उपगूहन तद् पित्तज्वरजनित सकलदाह गात्रसन्तापम् अपाकरोति निवारयति । वसन्ततिलकावृत्तम् ।

हिन्दी—स्नेहपूर्ण चञ्चल दृष्टिवाली, मोतियों की मालाओं से सुशोभित स्तनोंवाली, सकोचवश थोड़ा बोलने वाली, प्रगल्भ एवं प्रियतमा नायिकाओं का आलिंगन सभी प्रकार के सन्ताप को दूर करता है ॥ ३४ ॥

सरसीकमलं गतपङ्कमलं विलसत्कमलम्प्रसरत्कमलम् ।
हृतशोकमलङ्घ्यधनं किमलं सकलं न निराशितुमोषभरम् ॥३५॥

व्याख्या—सरसी तडाग तस्य कमल जल, गतपङ्कमलम् पङ्कमलेन रहित, विलसत्कमल विलसन्ति कमलानि यत्र तद् सुशोभितपङ्कजम्, प्रसरत्कमल प्रसरत्कान्तिमत्, हृतशोक शोकरहितम्, अलङ्घ्यधनम् पर्याप्तवित्तत्वम् एतत् सकलम् ओषभर दाहसमूह निराशितु दूरीकर्तुं किं न अलम् पर्याप्त नास्ति ? अपितु वर्तते एव । तोटकवृत्तम् ।

हिन्दी—कमलों की शोभा से सुशोभित सरोवर का कीचड़रहित निर्मल जल, शोक का अभाव और इच्छानुसार धन, क्या ये पदार्थ दाहसमूह का विनाश नहीं कर सकते ? अर्थात् इनके रहते हुए दाह उत्पन्न ही नहीं हो सकता ॥ ३५ ॥

यदा रसालोऽपि वरीवृतीति यदा मयूरोऽपि नरीनृतीति ।
यदा समीरोऽपि सरीसरीति तदा निदाघस्तु मरीमरीति ॥ ३६ ॥

व्याख्या—यदा रसाल आम्रफलम् ( अत्र रसालशब्द फलाय प्रयुक्त न तु वृक्षाय ) अपि वरीवृतीति अतिशयेन वर्तते, यदा मयूरोऽपि नीलकण्ठोऽपि "मयूरो बर्हिणो बर्हा नीलकण्ठो भुजङ्गभुक्" अमर.। नरीनृतीति अतिशयेन नृत्यति। यदा यस्मिन् काले समीरो जगत्प्राण सरीसरीति, अतिशयेन वहति, तदा तस्मिन् काले निदाघस्तु ऊष्मा मरीमरीति नून विनश्यति। वर्षारम्भकालस्यैतदवर्णन, तदानीं स्वयमेव निदाघशान्तिर्जायते। उपेन्द्रवज्रावृत्तम्।

हिन्दी—जब आम पकने लग जाँय, मयूर प्रसन्न होकर नाचने लगें और शीतल हवा पर्याप्तरूप में बहने लगे तब गर्मी एकदम शान्त हो जाती है ॥ ३६ ॥

**यदि मृगाङ्कमुखी मुखदृग्वपुः सुखकरेण करेण परामृशेत्।**
**श्रमनिदाघतृषां निकरस्तदा ज्वरवतो लवतः किमु संव्रजेत् ॥३७॥**

व्याख्या—यदि मृगाङ्कमुखी चन्द्रवदना प्रियतमा सुखकरेण आनन्ददायकेन करेण करपल्लवेन मुख च दृक् च वपु च एतेषा समाहार मुखदृग्वपु "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इत्यनेन एकवद्भाव। शरीराङ्गानि परामृशेत् स्पृशेत् चेत् तदा श्रमश्च निदाघश्च तृट् च तासा परिश्रमोष्मपिपासाना निकर. समूह ज्वरवतो मानवस्य लवत सर्वमपि सव्रजेत् किमु नास्त्यत्र सन्देहलेश। द्रुतविलम्बितवृत्तम्।

हिन्दी—यदि चन्द्रमुखी नायिका अपने सुखदायक करकिसलय से दाहपीडित रोगी के मुख, आंख तथा देह का स्पर्श करती रहे तो थकावट, दाह, पिपासा का सम्पूर्ण कष्ट शान्त हो जाता है।

विशेष—"लवतः" के स्थान पर 'तरसा' पाठ होना चाहिये। प्रकारान्तर से दोनों ही पाठ उपादेय हैं ॥ ३७ ॥

**उशीरशीतद्युतिशीतले यः क्षणे क्षणे तापमपाकरोति।**
**सौधानि धाराधरचुम्बितानि हारीणि गीतानि निशामुखानि ॥३८॥**

व्याख्या—उशीर नलद शीतद्युतिश्चन्द्र तच्च स च तौ तयो इवशीतल यत् स्थल तत्सम्बुद्धौ, उशीरशीतद्युतिशीतले स्थले य दाहपीडित क्षणे क्षणे प्रतिक्षण तापम् अपाकरोति दूरीकर्तुं वाञ्छति सः धाराधरो मेघ तेन चुम्बितानि स्पृष्टानि सौधानि राजभवनानि हारीणि चित्ताकर्षकाणि गीतानि निशामुखानि सायकालिकदृश्यानि सेवेत। अत्र पद्ये-"सौधनि धाराधरचुम्बितानि" इत्यनेन कविना पर्वतीयप्रदेशवर्णनस्य सङ्केत कृत, तत्र वार्षिकेषु चतुर्षु मासेषु मेघा आभूमि अभिलुठन्तो नेत्रयो पुर जवनिकारूपेण समापतन्ति, अहं दर्शनीयं तद् दृश्यम्। उपजातिवृत्तम्।

हिन्दी—खस और चन्द्रमा की किरणों के समान शान्ति प्रदान करनेवाले हे प्रियतमा! जो दाहपीडित, रोगी प्रतिक्षण दाहपीडा का शमन करना चाहता

है, वह बादल से घिरे हुए भवनों, मनमोहक गीतों तथा सायंकालिक दृश्यों का सेवन करे।

विशेष—"सौधानि धाराधरचुम्बितानि" से ग्रन्थकर्ता का आशय शीत प्रदेशों (कारमीर, शिमला, मसूरी, नैनीताल आदि शीतप्रधान पर्वतीय स्थानों) से है। वहाँ उक्त पद्यांश का अर्थ बरसात के दिनों में सामने दिखाई देता है ॥ ३८ ॥

सरोजराजिराजिते रजोविरञ्जिताजिरे।
गृहे सुदीर्घिका प्रिये निदाघनाशकारिणी ॥ ३९ ॥

व्याख्या—सरोजराजिराजिते सरसि जातानि सरोजानि तेषां राजि पंक्ति' तया राजिते शोभिते रजोविरञ्जिताजिरे रजसा कमलपरागेण विरञ्जिते रागयुक्ते यस्मिन् गृहे अजिरे हर्म्याङ्गणे या सुशोभना दीर्घिका वापिका भवति हे प्रिये! सा निदाघनाशकारिणी दाह-शामिका भवतीत्यर्थ। अनुष्टुप् छन्द।

हिन्दी—कमलों की पंक्ति से सुशोभित तथा उसी के पराग से सुवासित घर के आँगन के समीप निर्मित बावड़ी के सेवन से निदाघ की शान्ति होती है।

विशेष—इसके मूलपाठ में चतुर्थ पाद "धावालकारिणी" अशुद्ध है। उसके स्थान पर "निदाघनाशकारिणी" संशोधित पाठ लिखा गया है ॥ ३९ ॥

सारिकाशुकयोः स्वर्णमये पिञ्जरपञ्जरे।
स्थितयोश्च कलालापाः परमानन्ददायिनः ॥ ४० ॥

व्याख्या—सारिका च शुक च तयो सारिकाशुकयो, पाणिनेः "अल्पाच्तरम्" इति-अनुशासनबलात्, अत्र शुकसारिकयो इति पाठ साधीयान्। स्वर्णमये सुवर्णरचिते पिञ्जरपञ्जरे पिञ्जर च तत् पञ्जर तस्मिन् पीतवर्णयुक्ते तदागारे स्थितयो निवसतो कला-लापा मधुरसम्भाषणानि परमानन्ददायिनो भवन्ति, अतएव शैत्यापादका शान्तिदाश्चे-त्याक्षिप्यते। अनुष्टुप् छन्द।

हिन्दी—सोने के पिंजड़े में बैठे हुए शुक-सारिका का प्रेमालाप अत्यन्त आनन्द सुख एवं शान्तिदायक होता है ॥ ४० ॥

हारेण गुणिना यस्य संगतिः सम्प्रजायते।
तस्य दाहः शमं याति नात्र कार्या विचारणा ॥ ४१ ॥

व्याख्या—गुणिना हारेण मौक्तिकमालया यस्य दाहसन्तप्तस्य सगति सम्पर्क सम्प्र-जायते बोभवीति। तस्य दाह औष्ण्य शम शान्ति याति-अत्र विचारणा न कार्या। अनुष्टुप् छन्द।

हिन्दी—मोतियों की माला धारण करने से दाह का शमन होता है। इसमें सन्देह नहीं करना चाहिये ॥ ४१ ॥

उल्लसल्लोलकह्लारे सुन्दरीजनसुन्दरे।
अगारे रुचिराकारे स्वापो दाघमपोहति ॥ ४२ ॥

व्याख्या—उल्लसल्लोलकह्लारे उत् ऊर्ध्वं लसन्ति लोलानि चञ्चलानि कह्लाराणि सन्ध्याविकासिशुभ्रसरोजानि यत्र, सुन्दरीजनसुन्दरे सुन्दरीजनैः रमणीभिः सुन्दरे रमणीये रुचिराकारे दर्शनसेवनादौ सुखकरे आगारे भवने स्वापः शयनं दाघम् ऊष्माणम् अपोहति दूरीकरोति। अनुष्टुप् छन्दः।

हिन्दी—बावड़ी के जल के ऊपर लहराते हुए श्वेत कमलों वाले तथा सुन्दरी नायिकाओं से विलसित सब भाँति सुखद गृह में शयन करने से दाहशान्ति होती है ॥ ४२ ॥

केदारः कुमुदं कान्ता केतकी काननं कथा।
ककारषट्कं सन्दिष्टं महादाहविनाशनम् ॥ ४३ ॥

व्याख्या—केदारः जलपूर्णक्षेत्रं, कुमुदं कैरवं, कान्ता प्रियतमा, केतकी सूचिकापुष्पं, काननं गृहारामः कथा सुहृज्जनानां वार्ताप्रवृत्तिः एतत् ककारषट्कम् महादाहविनाशनं सन्दिष्टम्। दाहशान्त्यर्थम् एतेषाम् प्रयोगाः पृथक् पृथक् ग्रन्थेषु प्राचुर्येण समुपलभ्यन्ते किन्त्वत्र कविना दाहशान्तिवर्णनव्याजेन अनुप्रासच्छटा प्रादर्शि। अनुष्टुप् छन्दः।

हिन्दी—जलपूर्ण खेत, विकसित कमलवन, प्रियासहवास, केवड़ा का फूल, घर का बगीचा, प्रियजनों के साथ वार्तालाप, क अक्षर से प्रारम्भ होने वाले इन उपरिलिखित छः वस्तुओं के निरन्तर सेवन से तीव्र से तीव्र दाह भी शान्त हो जाता है ॥ ४३ ॥

सल्लकीरुचिरमालतमालनारिकेललवलीकदलीभिः।
चञ्चलाभिरनिलेन वलेन कस्य दाहमपहन्ति न योगाः ॥४३॥

व्याख्या—सल्लकी गजभक्ष्या, यथाह भावप्रकाशे—'शल्लकी गजभक्ष्या च सुवहा सुरभी रसा। महेरुणा कुन्दुकी च वल्लकी च बहुस्रवा। गुणाः—शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित्।' आदि। रुचिरञ्च तत् मालम् उन्नतभूतलं शीतत्वात् किं वा मालद्रुमः, तमालः तापिच्छः "तमालः शालवद् वेधो दाहविस्फोटनाशनः", भावप्रकाशः। नारिकेलः दृढफलम्, अस्य गुणाः—"विशेषतः कोमलनारिकेरं निहन्ति पित्तज्वरपित्तदोषान्। तस्याम्भः शीतलं हृद्यम्", अभिनवनिघण्टुः। लवली सुगन्धमूला चञ्चलाभिः वायुनान्दोलिताभिः कदलीभिः प्रसूनेनोत्पन्नेन अनिलेन वायुना अर्थात् कोमलकदलीपत्रपवनेन, अभिरोपधिभिः कृता-

योगा अनेन इठाद कस्य दाहानस्य दाह न अपहन्ति, अर्थात् सर्वेषामपि दाहान् विनाशयन्तीत्यर्थ । स्वागतावृत्तम् ।

हिन्दी—सलई, मनोहर उन्नतप्रदेश, तमाल, नारियल, लवलीलता तथा केला के पत्तों से उत्पन्न शीतल वायु, इनके सेवन से किसकी दाहशान्ति नहीं होती॥४४॥

कुसुमसायकसायककोमले हरिणलाञ्छनलाञ्छनलोचने ।
कमलविष्टरविष्टरभूषिते हरति कस्य रुजं न शुकस्य वाक् ॥४५॥

व्याख्या—कुसुमसायकसायककोमले कुसुमसायक कामदेव, तस्य सायको बाण, पुष्पं तद्वत् कोमले ! हरिणलाञ्छनलाञ्छनलोचने हरिणलाञ्छन चन्द्र तस्य लाञ्छन हरिण, तस्य लोचनमिव लोचन यस्या सा तत्सम्बुद्धौ, कमलविष्टरविष्टरभूषिते कमलविष्टरो ब्रह्मा तस्य विष्टर आसन कमल तेन भूषिते हे प्रियतमे ! ( अनेन रत्नकलाया पद्मिनीनायिकात्वमवगम्यते ) शुकस्य वाक वाणी कस्य रुज पीडा शोक दाह वा न हरति, अपितु सर्वस्यापि रुजं हरतीत्यर्थ । द्रुतविलम्बितम् ।

हिन्दी—पुष्प के समान कोमलाङ्गी, हरिण के समान चञ्चल नेत्रों वाली, और कमल के सदृश मनोहर रूपवाली रत्नकले ! शुक की वाणी किसकी दाहजनित पीड़ा को शान्त नहीं करती । अर्थात् सबकी पीड़ा को शान्त करती है ॥ ४५ ॥

शिशिरदीधितिदीधितिसंहतिः परिमलाऽऽकुलपेलवपल्लवाः ।
हृदयरञ्जनकोकिलकोकिलाकलकलश्रवणं च निदाघजित् ॥ ४६ ॥

व्याख्या—शिशिरदीधितिदीधिति शिशिरा शीता दीधितय किरणा यस्य सः चन्द्रमा तस्य दीधितीनां किरणाना या सहति समूह, परिमलाऽऽकुलपेलवपल्लवा परिमलेन परागेण आकुला व्याप्ता पेलवा मृदुला पल्लवा किसलयानि, हृदयरञ्जनकोकिलकोकिलाकलकलश्रवण हृदय रञ्जयतीति हृदयरञ्जन कोकिल, च कोकिला च कोकिले तयो, कलकलश्रवण कलरवाकर्णनम् एतत्त्रय निदाघो घर्मातप तस्य जित् जेता भवति, इति त्रयोदशभि पद्यैर्दाहशान्तिप्रकरण समाप्यते । द्रुतविलम्बितम् ।

हिन्दी—चन्द्रकिरणों का समूह, पुष्पपरागों से युक्त नवकिसलय और मन को लुभानेवाली कोयलदम्पति की सुरीली वाणी ये तीनों दाह शान्ति के प्रसिद्ध उपाय हैं ॥ ४६ ॥

पित्तज्वरे ग्रन्थकर्तु स्वानुभव —

पित्तज्वरे किं रसफाण्टलेपैः किं वा कषायैरमृतेन किंवा ।
पेयं प्रियायामुखमेकमेव लोलिम्बराजेन सदानुभूतम् ॥ ४७ ॥

व्याख्या—पित्तज्वरे पित्तजनिते ज्वरे रसफाण्टलेपै किं रस प्राणेश्वरवाडवादय, फाण्ट कषायभेद, यथाह फाण्टविधि —

क्षुण्णे द्रव्यपले सम्यग् जलमुष्ण विनिक्षिपेत् ।
मृत्पात्रे कुडवोन्मान ततस्तु स्रावयेत् पटात् ॥
स स्याच्चूर्णद्रव· फाण्ट । शार्ङ्गधरे ।

लेपः यथा—विभीतफलमज्जाया लेपो दाहार्तिनाशन । शार्ङ्गधर । किंवा कषायैः दाहशामकैः क्वाथैः, क्वाथविधि· अस्मिन्नेवाध्याये २० तमश्लोकस्य टीकाया द्रष्टव्य । अमृतेन सुशीतलेन जलेन किम् , अर्थात् उपरिलिखिता सर्वे उपाया व्यर्था तस्मात् एक केवलम् प्रियाया प्रीणातीति प्रिया तस्याः मुख पद्मगन्धिवक्त्रमेव पेयम् आस्वादनीयम् यतो हि लोलिम्बराजेन ग्रन्थकर्त्रा सदानुभूतम् । एष विधि युवकेषु प्रशस्त बालवृद्धेषु निषिद्ध प्रियाया दुर्लभत्वात् , शर्करभावाद् वा । इन्द्रवज्रावृत्तम् ।

**हिन्दी—पित्तज्वर की चिकित्सा के लिये ग्रन्थान्तरों में बताये हुए रस, फाण्ट ( चाय ), लेप, क्वाथ आदि के प्रपञ्च में नहीं पड़ना चाहिये। इसके लिये वैद्यवर श्रीलोलिम्बराज का कथन है कि केवल अपनी प्राणप्रिया के अधर रस का पान करना चाहिये। यह ग्रन्थकार का अनुभूत योग है ॥ ४७ ॥**

वातश्लेष्मज्वरे पञ्चकोलक्वाथ —

**कृष्णाकृष्णामूलचव्याग्निविश्वैरेभिः सर्वैर्जायते पञ्चकोलम् ।**
**वातश्लेष्मद्वेपि धत्ते हुताशं मुग्धे कान्ते तन्वि सुभ्रु प्रसन्ने ॥४८॥**

**व्याख्या**—कृष्णा पिप्पली कृष्णामूल पिप्पलीमूल, चव्य चविका, अग्निश्चित्रक विश्वा नागरम् एभि पञ्चभिर्मिलिते सति पञ्चकोलम् भवति । एतत् (एष पञ्चकोलक्वाथ ) वातश्लेष्मज्वरद्वेपि वातकफज्वरस्य विनाशकर्तृ, हुताश धत्ते जाठराग्नि दीपयति, इति ग्रन्थस्याशय· । मुग्धे सरले, कान्ते प्रिये, तन्वि कृशोदरि, सुभ्रु शोभनभ्रूलते, प्रसन्ने प्रसादगुणयुक्ते, इत्यादीनि सम्बोधनानि स्वप्रियायै प्रयुक्तानि ग्रन्थकर्त्रा । शालिनीवृत्तम् । प्रसिद्धोऽय योग सर्वत्राप्येवविधो· दृश्यते । यथा—

पिप्पलीपिप्पलीमूल चव्यचित्रकनागरम् । दीपनीय स्मृतो वर्ग कफानिलगदापह ॥
पञ्चभि· कोलमात्रन्तत् पञ्चकोल तदुच्यते ॥ भैषज्यरत्नावली ॥

**हिन्दी—प्रसन्नचित्त, सुन्दर भौंह, सरल स्वभाव एव पतली कमरवाली प्रिये ! पिप्पली, पिप्पलीमूल, चव्य, चीता तथा सोंठ इन पाच द्रव्यों का संग्रह पञ्चकोल कहा जाता है। पञ्चकोल का क्वाथ वातश्लेष्मज्वर को शान्त करता है और अग्नि को दीप्त करता है।**

विशेष—कोलपरिमाण—मागधमान के अनुसार—

**माषैश्चतुर्भि· शाण· स्याद्धरण· स निगद्यते ।**
**टङ्क स एव कथितस्तद्द्वय कोल उच्यते ॥ शार्ङ्गधरसंहिता ।**

चार माषा का एक शाण होता है, उसी का दूसरा नाम टंक अथवा धरण है। दो शाण का एक कोल होता है। इसी कोल प्रमाण के अनुसार ये पांचों द्रव्य लिये जाते हैं, अतएव इनको पञ्चकोल कहते हैं ॥ ४८ ॥

वातश्लेष्मज्वरं क्वाथमाह—

**वालेऽवाले वालवालेऽवलेऽस्मै हृच्छूलामश्लेष्मवातज्वरेषु ।**
**मुस्तातिक्ताग्रन्थिपथ्याऽरुजानां क्वाथः सम्यग्दीपनः पाचनश्च ॥४९॥**

**व्याख्या**—वाले युवति, अवाले बुद्धिमति, वालवाले कोमलकेशयुक्ते, अवले हे स्त्रि! अस्मै रोगिणे, हृच्छूलामश्लेष्मवातज्वरेषु हृत्पीडायाम् आमदोषयुक्तकफवातज्वरेषु मुस्ता मुस्तक, तिक्ता कुटकी, ग्रन्थि पिप्पलीमूलम्, पथ्या हरीतकी, अरुज आरग्वध —एतेषा क्वाथो देय । शालिनीवृत्तम् । एष क्वाथ सम्यक् प्रकारेणाग्निं दीपयति पाचन च करोति। ग्रन्थान्तरेषु योगोऽयम् आरग्वधादिकषायनाम्ना प्रसिद्धो लाभप्रदश्चास्ति । तद्यथा—

आरग्वधग्रन्थिकमुस्ततिक्ता-हरीतकीभि क्वथित• कषाय ।
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥ चक्रदत्त ।

**हिन्दी**—कोमल केशपाश वाली बुद्धिमती युवती प्रिये! इस रोगी को हृदय की पीड़ा में, आमदोषयुक्त कफवातज्वर में नागरमोथा, कुटकी, पीपरामूल, हरड़, अमलतास का क्वाथ देना चाहिये। यह क्वाथ अग्नि को प्रदीप्त कर भोजन को पचाता है। दूसरे ग्रन्थों में यह योग 'आरग्वधादि क्वाथ' के नाम से प्रसिद्ध है।

विशेष—इस श्लोक के तीसरे पाद का मूलपाठ इस प्रकार है—"मुस्तातिक्ता-ग्रन्थिपथ्या शरग्वेधानाम्" यह भूल प्रतिलिपिकर्ता की हो सकती है, यहाँ ग्रन्थकार का आशय दृष्टि में रखकर उक्त पाठ का इस प्रकार सशोधन किया गया है—"मुस्तातिक्ताग्रन्थिपथ्याऽरुजानाम्"। यह पाठ व्याकरण, छन्द तथा उपयोगिता की दृष्टि से शुद्ध है ॥ ४९ ॥

ज्वरकार्श्याय वह्निवृद्धये च क्वाथमाह—

**कृष्णाद्रिकृष्णामलकीहरीतकीक्वाथे प्रपीते दिवसेषु सप्तसु ।**
**ज्वरः स्ववृद्धिं दहनाय यच्छति ज्वराय कार्श्यं दहनश्च यच्छति ॥५०॥**

**व्याख्या**—कृष्णाद्रि शिलाजतु, कृष्णा पिप्पली, आमलकी धात्री, हरीतकी पथ्या, एतच्चतुष्टयस्य दिवसेषु सप्तसु सप्तमे दिवसे "अत्र निर्धारणे सप्तमी" क्वाथे प्रपीते सति ज्वर• स्ववृद्धिं दहनाय यच्छति ज्वरस्य तीव्रता दन्दह्यते, दहनो जाठराग्निश्च ज्वराय कार्श्यं यच्छति ज्वरमुत्तरोत्तर शिथिलयति। आयस लौहसम्भव शिलाजतु कृष्णाद्रिनाम्ना व्यवहृतमत्र तदेव सर्वश्रेष्ठ भवति । इन्द्रवंशावृत्तम् । यथा भावप्रकाशे—

लौह जटायुपक्षाभ तत्तिक्त लवण भवेद् । विपाके कटुक शीत सर्वश्रेष्ठमुदाहृतम् ॥

सप्ताहानन्तर क्वाथसेवनस्य विधानम्—

ज्वरित षडहेऽतीते लघ्वन्नप्रतिभोजितम्। पाचन शमनीय वा कषाय पाययेत्तु तम्॥
मै० र० ॥

हिन्दी—शिलाजीत, पिप्पली, आंवला, हरीतकी, इनका क्वाथ सातवें दिन रोगी को देना चाहिये। इसके सेवन से अग्नि प्रदीप्त होकर ज्वर का शमन होता है। फलत. ज्वररोगी नीरोग हो जाता है॥ ५०॥

कफज्वरे वचादिक्वाथ —

**उग्रापटोलत्रिफलावृषामृता-तिक्ताकषाये मधुना समन्विते।**
**पीने सति स्यात् ससुखः कफज्वरी नरः सकाम' प्रमदाधरे यथा॥५१॥**

व्याख्या—उग्रा वचा, पटोल तिक्तक, त्रिफला फलत्रिक, वृषा वासा अमृता गुडूची, तिक्ता कुटकी एतेषा मधुना समन्विते क्षौद्रयुक्ते कषाये क्वाथे पीते सति कफज्वरी तथा ससुख सुखेन समन्वित स्यात् यथा सकाम नर कामी पुरुष प्रमदाधरे कामिन्या अधरामृते लब्धे सति भवतीत्याशय.। चक्रदत्ते योगोऽय त्रिफलादिकषायनाम्ना प्राप्यते, तद्यथा—

त्रिफलापटोलवासाच्छिन्नरुहा रोहिणी च षड्ग्रन्था।
मधुना श्लेष्मसमुत्थे दशमूली-वासकस्य वा क्वाथ॥

तत्वज्ञानवता भिषग्वरेण लोलिम्बराजेन उत्तमोत्तमयोगेषु क्वापि परिवर्तन न कृतम्, अन्यत्र स्वानुभवबुद्धिबलाभ्यां यथायथं विपरिवर्तितम् इत्यस्माक द्रढीयान् विश्वास.। कफनाशार्थ पटोलस्य नाल ग्राह्यम्। यथा भावप्रकाशे—"नाल श्लेष्महरम्"। इन्द्रवंशावृत्तम्।

हिन्दी—घालवच, परवल की नाल, हरड़, बहेड़ा, आंवला, अडूसा, गिलोय, कुटकी, इनके क्वाथ में शीतल होने पर मधु मिलाकर पीने से कफज्वर वाले को वैसा ही सुख मिलता है जैसा कामी पुरुष को अपनी प्रिय नायिका के अधर-रसपान से॥ ५१॥

कफज्वरे कण्टकार्यादिक्वाथ.—

**व्याघ्र्यमृतौषधतोयदभार्ङ्गीधन्वयवाससमुत्थकषायः।**
**हन्ति कणारजसा कफजार्ति पुत्रइव प्रमदः पितृकीर्तिम्॥ ५२॥**

व्याख्या—व्याघ्री कण्टकारी, अमृता गुडूची, औषध शुण्ठी, तोयदो मुस्ता, भार्ङ्गी भृगुभवा, धन्वयासो दु स्पर्श एतेषा क्वाथ कणा पिप्पली तस्या रजसा चूर्णेन समन्वित' तथा कफजार्ति कफदोषसमुद्भवा पीडा हन्ति विनाशयति यथा प्रमदो मदोन्मत्त पुत्र. पितृकीर्तिम् पितु समुपार्जित यश हन्ति। दोधकवृत्तम्।

ग्रन्थारम्भे ग्रन्थकर्त्रा प्रतिश्रुत यद् आयुर्वेदीयमहिताभ्य साररूपेण साहाय्यमङ्गीकृत्य मयाऽत्र किञ्चिल्लिख्यते तदेव सर्वत्र दृश्यते। क्वचिदविकलो योग' स्वभापाप्रौढया परिष्कृत्य समुपात्त कुत्रचित् आवश्यक द्रव्यादिपरिवर्तनञ्चापि कृतम् इति तदीयपद्यै स्पष्ट व्यज्यते। यथा अस्मिन्नेव पद्ये कतिपयद्रव्यनिरासपूर्वक कफज्वरोक्तो निम्बादिकाथः समुपन्यस्तो भिषग्वरेण लोलिम्बराजेन तद्यथा—

निम्बाशिवामृतादारुशटीभूनिम्बपौष्करम्। पिप्पल्यौ बृहती चेति क्काथो हन्ति कफज्वरम्॥

**हिन्दी—कण्टकारी, गिलोय, सोंठ, नागरमोथा, भारंगी, जवासा इन द्रव्यों के क्काथ में पिप्पली का चूर्ण मिलाकर सेवन करने से यह कफज्वर का उस प्रकार समूल विनाश कर देता है जिस प्रकार मदोन्मत्त पुत्र अपने पिता के सुयश का॥ ५२॥**

अथ भाङ्ग्यादिकषाय —

**भार्ङ्गीगुडूचीघनदारुसिंही-शुण्ठीकणापुष्करकैः कषायः।**
**ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधां करोति प्ररुचिं तनोति॥५३॥**

व्याख्या—भार्ङ्गी भृगुभवा, गुडूची अमृता, घनो मुस्ता, दारु देवदारु', सिंही कण्टकारी, शुण्ठी महौषध, कणा पिप्पली, पुष्करक पौष्करमूलम् एतेषा कषाय ज्वर निहन्ति विनाशयति, श्वसन श्वासरोग क्षिणोति शमयति, क्षुधा करोति बुभुक्षा दीपयति, प्ररुचि प्रकृष्टमन्नाभिलाष तनोति। उपजातिवृत्तम्।

**हिन्दी—भारङ्गी, गिलोय, नागरमोथा, देवदारु, कण्टकारी, सोंठ, पीपल, पोहकर मूल इनका क्काथ श्वासयुक्त ज्वर का शमन कर भोजन के प्रति इच्छा को उत्पन्न करता हुआ भूख को बढ़ाता है॥ ५३॥**

कफपित्तज्वरे पटोलादिकाथ —

**पिबति यः कुलकत्रिफलावचामधुकनिम्बयुतं मधुना तथा।**
**ज्वर उपैति शमं कफपित्तजो गणकरोपकृतो विभवो यथा॥५४॥**

**व्याख्या**—कुलक पटोल, त्रिफला, फलत्रिक, वचा उग्रा, मधुको गुडपुष्प, निम्ब पिचुमर्द एतेषां मधुयुक्त क्काथ यो रोगी पिबति तस्य कफपित्तजज्वरस्तथा शान्तो भवति यथा गणकरोपकृतो ज्योतिर्विदस्तिरस्कारेण विभवो धनादिपदार्थ शान्तो विनष्टो भवतीत्यर्थ। द्रुतविलम्बितवृत्तम्। उक्तञ्च—

हतश्रीर्गणकान् द्वेष्टि हतायुश्च चिकित्सकान्। हतश्रीश्च हतायुश्च ब्राह्मणान् द्वेष्टि भारत॥
महाभारत॥

अधिकांशद्रव्याणां साम्यत्वादेष क्काथ पटोलादिकाथश्रेणीमधिरोहति।

हिन्दी—परवल की पत्ती, हरड़, बहेड़ा, आवला, थालवच, महुआ, नीम की छाल इनके क्वाथ का सेवन कफपित्तज्वर का इस प्रकार नाश करता है जिस प्रकार ज्योतिषी का अपमान करने से सम्पत्ति का नाश होता है ॥ ५४ ॥

रुचिकारक कषाय —

**मम द्वयं विस्मयमातनोति रुचिं चरीकर्त्यरुचः कषायः ।**
**निपीडितोरोजसरोजकोशा योषा प्रमोदं प्रचुरम्प्रयाति ॥ ५५ ॥**

**व्याख्या**—अरुच कटुकाया कषाय पित्तज्वरे रुचिं भोजनेच्छा चरीकर्ति प्रतनोति किं वा पित्तज्वरजनिता मुखतिक्तता दूरीकरोति । यथाह माधव·पित्तज्वरलक्षणेषु-"प्रलापो वक्त्रकटुतेत्यादि" । मुखस्य कटुना रुचेर्विनाश विधत्ते । निपीडितोरोजसरोजकोशा निपीडितौ अतिशयेन मर्दितौ उरोजौ एव सरोजकोषौ कुचकमले यस्या एवम्भूता सा योषा सीमन्तिनी प्रचुर प्रकाम प्रमोद मानसोल्लास प्रयात्यनुभवतीत्यर्थ । कटु पदार्थेन रुचे, कुचकमलयो पीडनेन सुखम्योत्पत्ति एतद् द्वय मम ग्रन्थकर्तु विस्मयम् आश्चर्यम् आतनोतीति कवेरभिप्राय । उपेन्द्रवज्रावृत्तम् ।

हिन्दी—लोलिम्बराज कहते हैं कि मुझे निम्नलिखित दो बातों से महान् आश्चर्य होता है। एक तो यह कि कुटकी ( स्वाद में अरुचिकारक ) के काढ़ा से भोजन के प्रति रुचि बढ़ती है। दूसरा यह कि नवयुवती के स्तनरूपी कमलकोशों को हाथों से दबाने पर ( जब कि वेदना का अनुभव होना चाहिये ) वह प्रसन्नता का अनुभव करती है ॥ ५५ ॥

**पिप्पलिपौष्करकट्फलशृंगी चूर्णकृतो मधुमानवलेहः ।**
**श्लेष्मतमस्तपनो ज्वररक्षोदाशरथिः कसनश्वसनघ्न. ॥ ५६ ॥**

**व्याख्या**—पिप्पली कणा, पौष्कर पुष्करमूल, कट्फल कुम्भिका, शृङ्गी कर्कटशृङ्गी एतेषा चूर्णेन साधितो मधुमिश्रितोऽवलेह श्लेष्मरूपिणे तमसेऽन्धकाराय तपन सूर्य, ज्वररक्षसे ज्वरानुकारिणे राक्षसाय दाशरथि दशरथस्यापत्यम्पुमान् = राम तथा कसन कास श्वसन श्वासरोग एतेषा घ्न विनाशकरः । दोधकवृत्तम् ।

अवलेहनिर्माणप्रकार.— क्वाथादीना पुन पाकाद् घनत्व सा रसक्रिया ।
सोऽवलेहश्च लेह स्यात्तन्मात्रा स्यात्पलोन्मिता ॥

तस्य परीक्षणम्— सुपक्वे तन्तुमत्व स्यादवलेहोऽप्सु मज्जति ।
स्थिरत्व पीडिते मुद्रा गन्धवर्णरसोद्भव ॥

हिन्दी—पिप्पली, पोहकरमूल, कायफल, काकड़ासिंगी इनके चूर्णों के योग से निर्मित मधुमिश्रित अवलेह कफजरोगरूपी अन्धकार के लिये सूर्य के समान,

ज्वररूपी राक्षस के लिये राम के समान विनाशकारी है। साथ ही यह अवलेह कास एवं श्वासरोग में भी लाभदायक है ॥ ५६ ॥

त्रिदोषज्वरे दशमूलादिक्वाथ.—

पञ्चाट्यद्वियपौष्करेन्द्रजशटीदुःस्पर्शराजीफलै-
स्तक्ताकर्कटश्टङ्गिभार्ङ्गिसहितैरेभिः कृतात् क्वाथतः।
हिक्कापार्श्वहृदर्तिवान्तिकसनश्वासत्रिदोषा अपि
प्रौढा यान्ति पराभवं खलु यथा वेदान्तिनस्तार्किकात् ॥५७॥

व्याख्या—पञ्चाड्द्वियम् उभयपञ्चमूल तत्र प्रथम—

| | |
|---|---|
| बृहत् पञ्चमूलम्— | विल्वश्योनाकगम्भारीपाटलागणिकारिका । दीपन कफवातघ्न पञ्चमूलमिद महत् ॥ |
| लघुपञ्चमूलम्— | शालिपर्णी-पृश्निपर्णी - बृहतीद्वय - गोक्षुरम् । वातपित्तहर वृष्य कनीय पञ्चमूलकम् ॥ |
| एतयो फलम्— | उभयम्पञ्चमूलन्तु सन्निपातज्वरापहम् । कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ चक्रदत्त । |

पौष्कर पुष्करमूलम्, इन्द्रज इन्द्रयव, शटी कर्चूर, दु स्पर्श. दुरालभा, राजीफल पटोल, तिक्ता कटुकी, कर्कटश्टंगी कुलीरविषाणिका, भार्ङ्गी भृगुभवा एतेषा क्वाथत. हिक्का, पार्श्वरुक्, हृत्पीडा, वान्ति वमन, कसन कास, त्रिदोष सन्निपातज्वर प्रौढता गता अपि एते रोगा तथा पराभव विनाश यान्ति यथा शास्त्रार्थे तार्किकात् नैयायिकाद् वेदान्तिन । यथैकस्मात् तार्किकाद् अनेके वेदान्तिन पराभव यान्ति तथैवैकस्मात् दशमूली-क्वाथाद् बहवो रोगा शम यान्तीति सम्पिण्डितोऽर्थ । अविकलोऽय योगश्चक्रदत्ते-अष्टादशाङ्गनाम्ना व्यवहृत. समुपलभ्यते । तद्यथा—

दशमूलीशटीश्टंगीपौष्कर सदुरालभम् । भार्ङ्गी कुटजबीजञ्च पटोल कटुरोहिणी ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापह. । कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहर ॥चक्रदत्त॥

त्रिदोषाणा बहुविधत्वम्—

शीघ्रगस्तान्त्रिकश्चित्तविभ्रम कण्ठकुब्जक । कर्णको जिह्वकश्चैव रुग्दाहश्चान्तकस्तथा ॥
भुग्ननेत्रो विलापश्च प्रलाप शीतलागक । अभिन्यासश्चेति विधात् सन्निपातास्त्रयोदश ॥
माण्डवीये ।

चरकस्तु तानेव विभजते—

सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य हि । प्राक्सूत्रितस्य वक्ष्यामि लक्षण वै पृथक्-पृथक् ॥
भ्रम पिपासा दाहश्च गौरव शिरसोऽतिरुक् । वातपित्तोल्बणे विद्याल्लिङ्ग मन्दकफे ज्वरे ॥
शैत्य कासोऽरुचिस्तन्द्रा पिपासादाहरुग्व्यथा । वातश्लेष्मोल्बणे व्याधौ लिङ्ग पित्तावरे विदु ॥

छर्दि शैत्य मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना । मन्दवाते व्यवस्यन्ति लिङ्ग पित्तकफोल्वणे ॥
सन्ध्यस्थिशिरस शूल प्रलापो गौरव भ्रम । वातोल्वणे स्याद्द्व्यनुगे तृष्णाकण्ठास्यशुष्कता ॥
रक्तविण्मूत्रता दाह स्वेदस्तृट् बलमक्षय । मूर्च्छा चेति त्रिदोषे स्याल्लिङ्ग पित्ते गरीयसि ॥
आलस्यारुचिहृल्लास - दाहवम्यरतिर्भ्रमै । कफोल्वण सन्निपात तन्द्रा कासेन चादिशेत् ॥
प्रतिश्याच्छर्दिरालस्य तन्द्रारुच्यग्निमार्दवम् । हीनवाते पित्तमध्ये चिह्न श्लेष्माधिके मतम् ॥
हारिद्रमूत्रनेत्रत्व दाहस्तृष्णाभ्रमोऽरुचि । हीनवाते मध्यकफे लिङ्ग पित्ताधिके मतम् ॥
शीतको गौरव तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् । हीनपित्ते वातमध्ये लिङ्ग श्लेष्माधिके विदु ॥
श्वास कास प्रतिश्यायो मुखशोषोऽति पार्श्वरुक् । कफहीने वातमध्ये लिङ्ग पित्ताधिके विदु ॥
च० चि० अ० ३ ॥

इत्येवमेतेषा भेदा पृथक् पृथक् चिकित्साग्रन्थेषु विहितास्तेऽत्र ग्रन्थविस्तरभयान्नोल्लिख्यन्ते । शार्दूलविक्रीडितम् ।

**हिन्दी-दोनों पञ्चमूल अर्थात् दशमूल (बेल, सोनापाठा, गम्भारी, पाढल, अरणी, शालपर्णी ( सरिवन ), पृष्ठपर्णी ( पिठवन ), छोटीकटेरी, बड़ीकटेरी, गोखरू, पोहकरमूल, इन्द्रजौ, कचूर, दुरालभा, परवल की पत्ती, कुटकी, काकड़ासिंगी, भारगी इनके क्वाथ के सेवन से हिचकी, पसलियों का दर्द, हृदय की वेदना, वमन, कास, श्वास तथा सन्निपातज्वर उस प्रकार पराभव को प्राप्त हो जाते है ( शान्त हो जाते हैं ) जिस प्रकार शास्त्रार्थ में तर्कशास्त्र के विद्वानों से वेदान्ती। जिस प्रकार एक तर्कशास्त्र के विद्वान से अनेक वेदान्ती हार जाते हैं वैसे ही इस एक योग के सेवन से अनेक रोगों का शमन हो जाता है ॥ ५७ ॥**

धनुर्वातादौ-अर्कादि क्वाथ —

**अर्कग्रन्थिकशिग्रुदारुचविकानिर्गुण्डिकापिप्पली-**
**रास्नाभृंगपुनर्नवानलवचाभूनिम्बशुण्ठीकृतः ।**
**क्वाथो हन्ति धनुःसमीरणमपस्मारं प्रसूतिं चलान्**
**कृच्छ्रान् कृच्छ्रतरत्रिदोषदलन. शैत्यस्य विध्वंसनः ॥५८॥**

व्याख्या—अर्क मन्दार , ग्रन्थिक पिप्पलीमूल, शिग्रु शोभाञ्जन, दारु देवदारु, चविका चव्य, निर्गुण्डिका भूतकेशी, पिप्पली मागधी रास्ना रसना, भृगो भगा, पुनर्नवा शोथघ्नी, नल पोटगल., वचा उग्रगन्धा, भूनिम्ब किरात , शुण्ठी विश्वा एतेषा क्वाथ धनु समीरण धनु - स्तम्भ ( "धनुस्तुल्य नमेद् यस्तु स धनु स्तम्भसञ्ज्ञक " माधव ) अपस्मार ( चिन्ता शोकादिभिर्दोषा क्रुद्धा हृत्स्रोतसि स्थिता । कृत्वा स्मृतेरपध्वसमपस्मार प्रकुर्वते ॥ माधव.) प्रसूति सूतिकाज्वर कृच्छ्रान् कष्टसाध्यान् चलान् वातविकारान् कृच्छ्रतरत्रिदोषदलन कष्टसाध्यसन्निपातनाशक शैत्यस्य विध्वसन शीतताविनाशकश्च प्रदिष्ट । शार्दूलविक्रीडितम् ।

हिन्दी—मदार, पिपलामूल, सहजन, देवदारु, चव्य, सम्हालू, छोटी पीपल, रासना, भांग, पुनर्नवा, नल्द, वचा, चिरायता, सोंठ इन औषधियों से बना हुआ क्वाथ धनु स्तम्भ, अपस्मार, प्रसूतज्वर, कष्टसाध्य वातविकार, सन्निपातज्वर तथा सर्दी से होने वाले सभी विकारों का नाश करता है ॥ ५८ ॥

कामादिहर क्वाथ —

सुदति सुमुखि वाले चारुभाले सुचैले
नखलिखितकपोले कामकर्मानुकूले ।
दलयति दशमूली कृष्णया कण्ठहृद्दृक्
श्वसनकसनतन्द्रापार्श्वशूलत्रिदोषान् ॥ ५९ ॥

व्याख्या—सुदति शोभना दन्ता यस्या सा तत्सम्बुद्धौ सुमुखि रुचिरास्ये, वाले अप्राप्तपूर्णयौवने चारुभाले रम्यमस्तकवति, सुचैले—उत्तमवस्त्रावृते, नखलिखितकपोले कररुहक्षतयुक्तगण्डस्थले, कामकर्मानुकूले मदनक्रीडायोग्ये हे प्रियतमे ! ( शृणु ) कृष्णा-पिप्पली तया युक्तो दशमूली दशमूलानि सन्ति यस्या सा ( बृहत्पञ्चमूल लघुपञ्चमूलञ्च ) तस्या कषाय कण्ठपीडा, हृदयवदनां दृष्टिरोगान्, श्वसन श्वास, कसन कास, तन्द्रा, पार्श्वशूल त्रिदोषान् ( त्रयोदशविधान् सन्निपातान् ) च दलयति चूर्णीकरोति । मालिनीवृत्तम् ।

यथा भैषज्यरत्नावल्याम—उभय पञ्चमूलन्तु सन्निपातज्वरापहम ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्ण सयुक्त कण्ठहृद्ग्रहनाशनम् ॥

हिन्दी—सुन्दर दांत, मुख, माथा, वस्त्र तथा नखक्षतों से युक्त कपोलों वाली एवं रतिक्रीडा योग्य सुन्दरी ! पिप्पली के चूर्ण से युक्त दशमूल का काढ़ा गला, हृदय, दृष्टि के रोगों, श्वास, कास, तन्द्रा, पसलियों के दर्द और सभी प्रकार के सन्निपातों को दूर करता है ।

विशेष—कण्ठ, हृदय, दृष्टि के रोग, श्वास, कास तन्द्रा, पार्श्वशूल ये जब सन्निपातज्वर के साथ उपद्रव के रूप में प्रकट होते हैं तब इस योग से लाभ होता है अथवा तब इसका सेवन करना चाहिये । जहां ये रोग स्वतन्त्ररूप से हों वहां इनकी पृथक् पृथक् चिकित्सा उस-उस प्रकरण में दी गई है ॥ ५९ ॥

सन्निपातस्यासाध्यत्वमाह—

त्रिदोषेण तुल्यः परेताधिराजः परेताधिराजेन तुल्यस्त्रिदोषः ।
परेताधिराजस्त्रिदोषैर्विजित्रस्तयोरेव साम्यं तयोरेव मन्ये ॥६०॥

व्याख्या—पद्यमिदं रचयता ग्रन्थकर्त्रा "उपमेयोपमाऽलङ्कार" मुखेन सन्निपातस्यासाध्यत्वमुपवर्णितम्—परेताधिराजोपम त्रिदोषेण सन्निपातेन तुल्यो मारकत्वात् परेताधि-

राजेन यमेन तुल्य' सम त्रिदोप सन्निपात, अत परेताधिराजो यम. त्रिदोपैर्विजित्रो विजेय । यतो हि तयोर्यमसन्निपातयो साम्य समानत्व यमसन्निपाताभ्यामेव सम्भाव्यम् इति मन्ये । भुजङ्गप्रयातम् । सन्निपातज्वरस्यासाध्यतां भयकरताञ्चवर्णयता मात्रमिश्रेण प्रतिपादितम् भावप्रकाशे—

नारायण एव भिषग्भेषजमेतेषु जाह्नवीतोयम् ।
नैरुज्यहेतुरेको नित्य मृत्युञ्जयो ध्येय ॥

अन्यच्च—

मृत्युना सह योद्धव्य सन्निपातचिकित्सुना ।
यस्तु तत्र भवेज्जेता स जेताऽऽमयसङ्कुलम् ॥

हिन्दी—यमराज त्रिदोप के समान होता है और त्रिदोप यमराज के समान होता है, फिर भी त्रिदोप को जीतने से यमराज को जीतना सरल है । अत इन दोनों की तुलना इन्हीं दोनों से हो सकती है । अन्य किसी के साथ नहीं ॥ ६० ॥

सन्निपातनिवारकवैद्यप्रशसा—

यः सन्निपातसलिलाधिपतौ निमग्नाञ्-
जन्तून् समुद्धरति वैद्यपतिः स एव ।
तस्याश्वदान-गजदान-फलानि कां च-
पूजां न सोऽर्हति भणन्ति महान्त इत्थम् ॥ ६१ ॥

व्याख्या—यश्चिकित्सक सन्निपातसलिलाधिपतौ सन्निपात एव सलिलाधिपति समुद्रः तस्मिन् निमग्नान् सन्निपातज्वरग्रस्तान् जन्तून् प्राणिन समुद्धरति नीरुजान् करोति स एव वैद्यपति कविराज, तस्य तस्मै अत्र चतुर्थ्यर्थे षष्ठी चिन्त्या, अश्वदान, घोटकदान, गजदान, फलदान च दातव्य यतो हि स का च पूजा न अर्हति । अपितु सर्वविधपूजायोग्य स, इत्थ महान्तो विवेकशीला भणन्ति कथयन्ति । वसन्ततिलका वृत्तम् । प्रकारान्तरेण चिकित्सकस्य ऋणमुक्तौ शास्त्रनिर्देश'—

चिकित्सितशरीर यो न निष्क्रीणाति दुर्मति' । स यत्करोति सुकृत तत्सर्वं भिषगश्नुते ॥ मै० र० ॥

हिन्दी—जो सन्निपातरूपी समुद्र में डूबे हुए रोगी का चिकित्सा द्वारा उद्धार कर देता है, अर्थात् नीरोग कर देता है, वही वास्तविक चिकित्सक है । उसको हाथी, घोड़ा तथा उत्तमोत्तम फल देने चाहिये, इतना ही नहीं और भी सब प्रकार उसकी पूजा करनी चाहिये । यही महापुरुषों की आज्ञा है ।

विशेष—इस पद्य की तीसरी पंक्ति व्याकरण की दृष्टि से अशुद्ध प्रतीत होती है इसके स्थान पर इस प्रकार का परिवर्तन कर देने से भाषा शुद्ध होकर भाव ज्यों का त्यों रह जाता है । यथा—"तस्मै गजाश्वफलदानमुशन्ति कां च"। पाठक इस संशोधन पर ध्यान दें ॥ ६१ ॥

तदेव प्रकारान्तरेण वक्ति—

सर्वस्वैः पूजयेद् वैद्यं सन्निपाताद् विवर्जितः।
नो चेत् स नरकं याति शम्भुरित्याह पार्वतीम् ॥ ६२ ॥

व्याख्या—सन्निपाताद् विवर्जित सन्निपातरोगान्मुक्तो रोगी सर्वस्वैः स्वकीयसकलधनधान्यादिभिः वैद्य चिकित्सकं पूजयेद् अर्चयेत्। नो चेद् अन्यथा कृते सति स रोगान्मुक्तो नरकं निरयं याति पापभाग्भवति इति शम्भुः पार्वतीम् आह कथितवान्। "नहि जीवितदानाद्धि दानमन्यद् विशिष्यते" इति शास्त्रानुसारं जीवनप्रदाय सुचिकित्सकाय स्वस्थो रोगी यत्किञ्चिदपि ददाति तत्सर्वं स्वल्पमेव। अनुष्टुप्।

हिन्दी—शिवजी पार्वती से कहते हैं—सन्निपातज्वर से मुक्त रोगी अपने चिकित्सक की सम्मानपूर्वक धनादि उत्तमोत्तम पदार्थों से यथाशक्ति पूजा करे। हे पार्वती! जो रोगमुक्त व्यक्ति ऐसा नहीं करता वह नरकगामी होता है अर्थात् दुखी रहता है ॥ ६२ ॥

कर्णमूलजशोथचिकित्सामाह—

युक्त्वक्शुण्ठीकारवीकट्फलानां तुल्यांशानां चूर्णितानां विमिश्रैः।
वारंवारं कर्णमूलोत्थशोथं रक्तस्रावैराज्यपानैर्जयेद्वा ॥६३॥

व्याख्या—युक्त्वक् चित्रकत्वक् शुण्ठी महौषधं कारवी शतपुष्पा कट्फलं कुम्भिका तुल्यांशानां समभागवतां चूर्णितानाम् एतेषां विमिश्रैः मिश्रितैः लेपैः कर्णमूलोत्थं शोथं जयेद् अपहरेत् किंवा रक्तस्रावैः शृङ्ग्यादियन्त्रैर्जलौकादिभिर्वा रक्तस्रावं कारयेत् अथवा आज्यपानविधिना आज्यं पाययेत्। शालिनीवृत्तम्। भैषज्यरत्नावल्यामपि—

रक्तावसेचनैः पूर्वं सर्पिष्पानैश्च तं जयेत्। प्रदेहैः कफवातघ्नैर्वमनैः कवलग्रहैः ॥

यद्यपि—

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोफः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥वाग्भट॥

एतदनुसारं सन्निपातान्ते कर्णमूलजः शोथः असाध्यः किन्तु ग्रन्थान्तरे तस्य त्रिधा गतिर्निर्दिष्टा, तद्यथा—

ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोफः।
क्रमादसाध्यः खलु कष्टसाध्यः सुखेन साध्यः कथितो मुनीन्द्रैः ॥

हिन्दी—चीता की छाल, सोंठ, सौंफ, कायफल, सभी द्रव्यों को समभाग लेकर इनका चूर्ण कर लें, पानी के साथ पीसकर इसका लेप लगाने से सन्निपात ज्वर के बाद होने वाला कर्णमूलजशोथ शान्त हो जाता है। अथवा जोंक आदि के द्वारा रक्तस्राव कराना चाहिये या शोथनाशक औषधियों से सिद्ध घृतपान कराना चाहिये ॥ ६३ ॥

कर्णादिरुजाहरो लेप —

अग्निमन्थाग्निरास्नाभिर्मातुलुङ्गस्य मूलकैः।
सदारुनागरैर्लेपः कर्णपार्श्वरुजो हरः ॥ ६४ ॥

व्याख्या—अग्निमन्थ श्रीपर्णी अग्नि चित्रक. रास्ना सुवहा मातुलुङ्ग• वीजपूरक एतेषां मूलकै., दारु देवदारु नागर शुण्ठी एताभ्या सह कृतो लेप •कर्णस्य कर्णयो• वा पार्श्वे समीपे या रुक् शोथात्मिका तस्या हर इति। अनुष्टुप् छन्द । भैषज्यरत्नावल्यामपि योगोऽय लभ्यते—

वीजपूरकमूलानि अग्निमन्थ तथैव च। सनागर देवदारु चव्यचित्रकपेषितम् ॥
प्रलेपनमिद श्रेष्ठ गले श्वयथुनाशनम् ॥ भै० र० ॥

हिन्दी—अरणी, चित्रक, रास्ना, विजौरा नीबू इनकी जड़ें तथा देवदारु और सोंठ इनको कूट-पीसकर लेप करने से सन्निपात ज्वर के अन्त में होनेवाला कर्णमूलज शोथ शान्त हो जाता है ॥ ६४ ॥

गुटपिप्पली-प्रयोग —

अजीर्णजीर्णज्वरपाण्डुकासश्वासाग्निसादाऽरुचिजांस्तु दोषान्।
दूरीकरोत्याशु गुडेन कृष्णा कृष्णेव कृष्णेन विमोहमंहः ॥ ६५ ॥

व्याख्या—अजीर्ण जीर्णज्वर पाण्डुरोग कास श्वासम् अग्निसादम् अग्निमान्द्यम् अरुचिजम्। अरुचे कारणेनोत्पन्ना ये दोषा विकारास्तान् विकारान् गुडेन युक्ता कृष्णा पिप्पलीचूर्णम् आशु शीघ्र तथा दूरीकरोति यथा कृष्णेन वसुदेवसूनुना कृष्णा। द्रौपदी ( चीरहरणावसरे ) अह दुष्कृत विमोहवैचित्य दूरीकृतवती तद्वत्। यथा द्रौपद्या स्मरणमन्तरा कृष्णेन तस्य शीलरक्षा कृता तद्वद् एव गुटपिप्पलीप्रयोग पूर्वोक्तेभ्यो रोगेभ्य पीडितान् रक्षतीति भाव•। उपजातिवृत्तम्। यथाह चक्रपाणि —

जीर्णज्वरेऽग्निसादे च शस्यते गुटपिप्पली। चक्रदत्ते।

हिन्दी—अनपच, जीर्णज्वर, पाण्डुरोग, कास, श्वास, अग्नि की मन्दता तथा अरुचि के कारण उत्पन्न दोषों को गुड़ मिश्रित पिप्पली चूर्ण का सेवन उस प्रकार दूर करता है जिस प्रकार चीरहरण के अवसर पर श्रीकृष्ण ने द्रौपदी के कष्ट को दूर किया ॥ ६५ ॥

जीर्णज्वरे कषाय —

जीर्णज्वरं कफयुतं कणया समेतं
छिन्नोद्भवोद्भवकषायक एष हन्ति।
रामो दशास्यमिव राम इव प्रलम्बं
रामो यथा समरमूर्धनि कार्तवीर्यम् ॥ ६६ ॥

व्याख्या—एष कणया पिप्पल्या समेत सहित यथा स्यात्तथा छिन्नोद्भवोद्भवकषायको गुडूचीनिर्मित क्वाथ कफयुत जीर्णज्वर तथा हन्ति यथा रामो दाशरथि दशास्य रावण, रामो बलराम प्रलम्बम् असुरविशेष, राम परशुराम समरमूर्धनि युद्धभूमौ कार्तवीर्यम् अहनत् । वसन्ततिलका वृत्तम् । यथाह चक्रपाणि.—

पिप्पलीचूर्णसयुक्त' क्वाथश्छिन्नरुहोद्भव. । जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥ चक्रदत्ते ।

हिन्दी—छोटी पीपल और गिलोय का क्वाथ जीर्ण कफज्वर का उसी प्रकार विनाश करता है जिस प्रकार राम ने रावण का, बलराम ने प्रलम्बासुर का और परशुराम ने युद्धभूमि में कार्तवीर्य का विनाश किया ॥ ६६ ॥

पञ्चमूलपिप्पलीप्रयोग —

**पञ्चमूलसलिलं चपलाया धूलिभिर्विलुलितं प्रपिबन्तम् ।**
**पूरुषं कफचिरज्वरपीडा संजहाति विधनं गणिकेव ॥ ६७ ॥**

व्याख्या—पञ्चमूल बृहत्पञ्चमूल चपलाया कणाया धूलिभि चूर्णं विलुलित मिश्रित सलिल क्वाथ प्रपिबन्त प्रकर्षेण नियमानुसार पान कुर्वन्त पुरुष रोगिण कफचिरज्वरपीडा जीर्णकफज्वराभिधानो रोग तथा सजहाति सम्यक् प्रकारेण त्यजति यथा विधन विगत धन यस्य त धनरहित पुरुष गणिका वारवधू । स्वागतावृत्तम् ।

हिन्दी—बृहत्पञ्चमूल और छोटी पीपल के क्वाथ को पीने वाले जीर्णकफज्वर से पीडित रोगी को उसका रोग उसी प्रकार छोड़ देता है जिस प्रकार धनहीन पुरुष को वेश्या छोड़ देती है ॥ ६७ ॥

मुस्तादिक्वाथ —

**मुस्ताऽमृतानन्तकिरातसिंहीशुण्ठीशटीपर्पटरोहिणीनाम् ।**
**क्वाथः कणाक्षौद्रयुतः प्रशस्तो जीर्णज्वरे वा विषमज्वरे वा ॥ ६८ ॥**

व्याख्या—मुस्ता मुस्तम् अमृता गुडूची अनन्ता दुरालभा, किरात तिक्त सिंही कण्टकारी शुण्ठी महौषधम् , शटी कर्चूर' पर्पट. वरतिक्त ( पित्तपापडा इति ख्यात ) रोहिणी मासरोहिणी कणा पिप्पली एतेषा मधुयुत क्वाथ जीर्णज्वरे किंवा विषमज्वरे चिकित्सकै प्रशस्त । इन्द्रवज्रावृत्तम् । भैषज्यरत्नावल्यामपि एष योगो लभ्यते—तद्यथा—

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथ । पीत सकणाचूर्ण समधुर्विषम ज्वर हन्ति ।

हिन्दी—नागरमोथा, गिलोय, दुरालभा, चिरायता, कण्टकारी, सोंठ, कचूर, पित्तपापड़ा, मासरोहिणी और पिप्पली इनका क्वाथ मधु के साथ सेवन करने से जीर्णज्वर एव विषमज्वर का विनाश करता है ॥ ६८ ॥

ऐकाहिकज्वरे क्वाथ —

**वासापटोलत्रिफलाद्राक्षाशम्याकनिम्बजः ।**
**समधुःससितः क्वाथो हन्यादैकाहिकं ज्वरं ॥ ६९ ॥**

व्याख्या—वासा आटरूप पटोल वरतिक्त त्रिफला फलत्रिकम् द्राक्षा मृद्वीका शम्याक आरग्वध. निम्ब पिचुमर्दः एतेषा मधुना सितया च सह मिलित क्राथ ऐकाहिक ज्वर प्रतिदिनम् एककाले य समायाति त हन्याद विनाशयेत्। पूर्वोक्तादीनाम् ओषधीना काथे सिद्धे सति तत्र मधुसितयो प्रक्षेप कर्तव्य । अनुष्टुप्छन्द ।

हिन्दी—अडूसा, परवल की पत्ती, हरड़, बहेड़ा, आंवला, मुनक्का, अमलतास, नीम की छाल इसका क्राथ मधु और मिश्री मिलाकर पीने से ऐकाहिक ज्वर का विनाश करता है।

विशेष—चरक, सुश्रुत एव वाग्भट में से ऐकाहिक ज्वर का नामत. उल्लेख नहीं है। केवल निदान के ही लिये लिखे हुए माधवनिदान में भी इसका मूल मे तथा इसके प्रसिद्ध टीकाकार श्रीविजयरक्षित एव श्री कण्ठदत्त के द्वारा लिखित मधुकोष टीका में भी इसका शब्दत वर्णन नहीं किया गया किन्तु चिकित्सा-प्रधान ग्रन्थों भैषज्यरत्नावली आदि में ऐकाहिक ज्वर चिकित्सा नाम से अनेक योग मिलते हैं। हमारे विचार से यह अन्येद्युष्क ज्वर का पृथग् नामकरण मात्र है। यथा—"अन्येद्युष्कस्त्वहोरात्र एककाल प्रवर्तते।" दिन-रात में केवल एकबार आने वाले ज्वर को "अन्येद्युष्क" कहते हैं और ऐकाहिक शब्द का पारिभाषिक अर्थ भी यही होता है। ऐकाहिक आदि विषमज्वरों में दैवव्यपाश्रय एव युक्तिव्यपाश्रय चिकित्सा द्वारा भी लाभ होता है। इसके विविध प्रयोग चिकित्सा ग्रन्थों में मिलते हैं ॥ ६९ ॥

तृतीयकज्वरे चन्दनादिक्काथ —

**सशिशिरः सधनः समहौषधः सनलदः सकणः सपयोधरः।**
**समधुशर्कर एष कषायको जयति सत्वरमेव तृतीयकम् ॥ ७० ॥**

व्याख्या—शिशिर रक्तचन्दन धन धन्याक महौषध शुण्ठी नलदम् उशीर कणा पिप्पली पयोधरो मुस्ता एभिर्द्रव्यै. सहित साधितश्च समधुशर्कर मधुशर्कराभ्या समन्वितो युक्त एष कषायक सत्वरमेव शीघ्रमेव तृतीयक ज्वरविशेष जयति स्ववशमानयति विनाशयतीत्यभिप्राय । तत्र सामान्यचिकित्सासूत्रम् "कर्म साधारण जह्यात्तृतीयकचतुर्थके।" च० चि० ३ ॥ तृतीयेऽह्नि भव तृतीयक त्र्याहिक वा। द्रुतविलम्बितवृत्तम्। यथा चक्रपाणि चक्रदत्ते—

महौषधामृतामुस्तचन्दनोशीरधान्यकै । क्वाथस्तृतीयकं हन्ति शर्करामधुयोजित ॥

हिन्दी—लालचन्दन, धनियाँ, सोंठ, खस, पिप्पली, नागरमोथा इन द्रव्यों के द्वारा निर्मित क्राथ में मधु एव मिश्री मिलाकर पीने से तृतीयकज्वर का शमन हो जाता है।

विशेष—जहाँ भी क्राथ में शहद मिलाने का निर्देश हो वहाँ क्राथ के शीतल

होने पर ही मिलाना चाहिये। तृतीयकज्वर को साधारण बोलचाल में 'तिजारी बुखार' कहते हैं। यह एक दिन का अन्तर देकर पुन तीसरे दिन आता है अत एव इसको तृतीयक कहते हैं ॥ ७० ॥

चातुर्थिकज्वरे नस्यम्—

**चातुर्थिको गच्छति रामठस्य घृतेन जीर्णेन युतस्य नस्यात्।**
**लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ७१ ॥**

व्याख्या—जीर्णेन घृतेन पुराणसर्पिषा युतस्य रामठस्य हिङ्गो नस्यात् नावनात् चातुर्थिक चतुर्थेऽह्नि भव "चतुर्थेऽह्नि चतुर्थक" माधव। अन्यदपि "दिनद्वय त्वतिक्रम्य य स्यात्स हि चतुर्थक", गच्छति शान्ति प्राप्नोति, यथा—नवयौवनानां नवोढाना युवतीना तथा च लीलावतीनां हावभावादिविलासयुक्तानां स्त्रीणां मुखावलोकान्मुखस्य दर्शनात् साधुभावो धीरता गच्छति तथा ज्वरोऽपि याति, यद्यपि अस्थिगतमज्जागतज्वरयो पृथक्-पृथग् लक्षणानि माधवेनोल्लिखितानि तथापि चातुर्थिकविपर्ययाऽऽख्योऽन्य एव विषमज्वरः। इन्द्रवज्रावृत्तम्।

तद्यथा—

अस्थिमज्जागतो दोषश्चातुर्थिकविपर्यय। जायते भिषजा ज्ञेयो विषमज्वर एव स ॥
भावप्रकाशे ॥

हिन्दी—पुराने घी में हींग मिलाकर नस्य लेने से चौथे दिन आने वाला ज्वर उस प्रकार चला जाता है, जिस प्रकार हाव-भाव, कटाक्षादि में कुशल नवयुवतियों के (मुख) दर्शन से सज्जनता। यह स्नेहन नस्य है ॥ ७१ ॥

देवदार्वादिक्वाथ —

**सुरदारुशिवाशिवास्थिरावृषविश्वै. कथितः कषायकः।**
**मधुना सितया समन्वितः परिपीतः शमयेच्चतुर्थकम् ॥ ७२ ॥**

व्याख्या—सुरदारु देवदारु. शिवा हरीतकी शिवा आमलकी स्थिरा शालपर्णी वृष आटरूषक विश्व शुण्ठी षड्भिरेभिर्द्रव्यै कथितोऽभिहित कषायक क्वाथ मधुना सितया च समन्वित मधुसिताभ्यां मिलित परिपीत कृतपान चतुर्थक शमयेत् चतुर्थेऽह्नि भव ज्वर नाशयेत्। यथाह वगसेन —

स्थिरासामलकीदारुशिवावृषमहौषधै।
शृत शीत जल दद्यात् सितामधुसमन्वितम् ॥
चातुर्थिके ज्वरे तीव्रे मन्दे चाप्यथ पावके।

भावमिश्रोऽप्येन समर्थयति—

स्थिरातामलकी दारु शिवा वृषमहौषधै।
सितामधुयुत. क्वाथश्चातुर्थकहर पर ॥

तामलकी = भूधात्री।

तमेव योग चक्रदत्ते चक्रपाणि — वासाधात्रीस्थिरादारुपथ्यानागरसाधित ।
सितामधुयुत क्वाथश्चातुर्थिकनिवारण' ॥

शार्ङ्गधरसहितायामप्येष पाठ सुलभ । ग्रन्थान्तरेष्वपि सुलभोऽयं योग केवल रचना वैशिष्ट्यमेव कवे शेवधि । 'शिवा हरीतकी प्रोक्ता भवेदामलकी शिवा' अनेकार्थ ।

पद्येऽस्मिन् वियोगिनी छन्द ।

हिन्दी—देवदारु, हरीतकी, आवला, शालिपर्णी, अडूसा, सोंठ इनके क्वाथ में मधु और मिश्री मिलाकर पीने से चौथैया ज्वर का शमन हो जाता है ॥ ७२ ॥

शीतज्वरे योगत्रयम्—

**भज वेपथुमन् सदा हसन्ती गतधूमां च विलासिनीं हसन्तीम् ।**
**कठिनस्तनमञ्जुलोज्ज्वलांगां मधु च त्र्यूषणकेन कट्फलं वा ॥ ७३ ॥**

**व्याख्या**—हे वेपथुमन् ! शीतज्वरपीडित, सदा सर्वदा गतधूमा धूमेन रहिता हसन्तीम् अङ्गारधानिकाम् "अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि", अमर ॥ ( सग्गड, बोरसी ) भज सेवस्व । अथवा कठिनस्तनमञ्जुलोज्ज्वलाङ्गां कठिनौ स्तनौ यत्र तत् कठिनस्तन मञ्जुल सुन्दरञ्च तद् उज्ज्वलाङ्ग मञ्जुलोज्ज्वलाङ्गम् यस्या एवम्भूता या सा ता हसन्तीम् प्रसन्नमुखारविन्दवती विलासिनीं नवोढा नायिका भज आलिङ्गय । किंवा विश्वोपकुल्या-मरिचाना समाहार त्र्यूषण कट्फल कुम्भिका एतेषा मधुयुत चूर्ण भज भक्षय । अत्र मधुशब्देन मद्यसेवनस्यापि सङ्केत शीतवारकत्वात् तदित्थम्—

मधु मद्ये मधु क्षौद्रे मधु पुष्परसे विदु ।
मधुश्चैत्रे मधुर्दैत्ये मधुकेऽपि मधु स्मृत ॥ इत्यनेकार्थ ।

मद्यगुणा — मद्य सर्वं भवेदुष्ण पित्तकृद् वातनाशनम् ।
भेदन शीघ्रपाक च रूक्ष कफहर परम् ॥ अभिनवनि० ।

त्र्यूषणस्य गुणा — त्र्यूषण दीपन हन्ति कासश्वासत्वगामयान् ॥ तदेव ।

विलासिनीसेवने गुणानाह— कूपोदक वटच्छाया नारीणां सुपयोधरौ ।
शीतकाले भवेदुष्णमुष्णकाले तु शीतलम् ॥

यथाह भावमिश्र — त स्तनाभ्यां सुपीनाभ्या पीवरोरुर्नितम्बिनी ।
युवती गाढमालिङ्गेत्तेन शीतम्प्रशाम्यति ॥ भा प्र म ख ।

अग्निसेवने गुणा — अग्निर्वातकफस्तम्भशीतवेपथुनाशन ।
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपण ॥ भावप्रकाशे ।

ज्वरचिकित्साप्रकरणे— त्रयोदशविध स्वेद स्वेदाध्याये निदर्शित ।
मात्राकालविदा युक्त स च शीतज्वरापह ॥ च चि अ ३ ।

हिन्दी—हे शीतज्वर से पीड़ित रोगी ! धूमरहित जलते हुए कोयलोंवाली बोरसी, अगीठी या अंगारधानिका का सेवन कर । अथवा सुरूपा विशाल स्तनों

वाली एव प्रसन्नचित्त युवती का आलिंगन कर। नहीं तो सोंठ, मरिच, पीपल, कट्फल के चूर्णों का मधु के साथ सेवन कर ( या केवल उत्तम कोटि के मद्य ( शराब ) का उचित मात्रा में सेवन कर )। ये तीनों योग शीतज्वर नाशक हैं ॥

चतुर्थकज्वरे नस्यम्—

अगस्त्यपत्रस्वरसैर्नस्याद्याति चतुर्थकः।
संसारसागर इव पुरारिपुरसेवनात् ॥ ७४ ॥

व्याख्या—अगस्त्यपत्र मुनिद्रुमदल तस्य स्वरसै नस्यात् नावनात् चतुर्थक ज्वर. तथा याति यथा पुरारिपुर काशी तस्य सेवनात् ससारसागर भवबन्धनम् याति विनश्यति। यथाह चक्रपाणि चक्रदत्ते "नस्य चातुर्थक हन्ति रसो वाऽगस्त्यसम्भव"। रेचनस्नेहन-भेदाभ्या नस्यस्य द्वैविध्यम्—

नस्यभेदो द्विधा प्रोक्तो रेचन स्नेहन तथा। रेचन कर्षण प्रोक्तस्नेहन बृंहण मतम् ॥ शा स।

एतन्नस्य रेचनार्थ प्रयुज्यते। कटुतैलादिकस्य प्रतिदिन प्रयुज्यमान नस्य बृंहण भवति। अनुष्टुप्छन्द।

हिन्दी—अगस्त्य पत्रों के स्वरस का नस्य लेने से रोगी चौथैया ज्वर से उस प्रकार मुक्त हो जाता है, जिस प्रकार काशीवास करने से मानव भवसागर के बन्धनों से ( मुक्त हो जाता है )। यह रेचन नस्य है ॥ ७४ ॥

शीतज्वरे शक्राह्वादिकषाय —

शक्राह्वदद्रुघ्नविषामृतानां निर्गुण्डिकाभृङ्गमहौषधानाम्।
क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेताः ॥ ७५ ॥

व्याख्या—शक्राह्व इन्द्रयव दद्रुघ्न चक्रमर्द वृष वासक अमृता गुडूची निर्गुण्डिका सिन्दुवार भृङ्ग गजा केशराज वा महौषध शुण्ठी क्षुद्रा लघुकण्टकारी यवानी अजमोदा नवभिरेभिर्द्रव्यै साधित कषाय शीतज्वरारण्यहिरण्यरेता शीतज्वर एव- वन तस्य विनाशाय अग्निरिव समर्थ। इन्द्रवज्रावृत्तम्।

हिन्दी—इन्द्रजौ, चकवड़ के बीज, अडूसा, गिलोय, सम्हालू, भाग, सोंठ, छोटी कटेरी, अजवायन इन नौ द्रव्यों मे निर्मित क्वाथ शीतज्वररूपी वन का विनाश करने के लिये अग्नि के समान समर्थ है। अर्थात् यह क्वाथ शीतज्वर-नाशक है ॥ ७५ ॥

विषमज्वर नागरादि कषाय —

सनागराया. सपयोधराया. ससिंहिकाया. सगुडूचिकायाः।
धात्र्याः कषायो मधुना समेतः कणासमेतो विषमज्वरे स्यात् ॥ ७६ ॥

व्याख्या—नागर शुण्ठी पयोधर मुस्ता सिंहिका बृहती गुडूची अमृता धात्री

आमलकी पञ्चैतासामोषधीनां क्वाथः मधुना क्षौद्रेण कणया पिप्पल्या च समेतो विमिश्रः विषमज्वरे स्यात् विषमज्वरनाशकः प्रदिष्टः । यथाह भावमिश्रः —

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ भा. प्र. म. ख. ॥

भैषज्यरत्नावल्यामपि योगोऽयं तथैवोद्धृतो दृश्यते । उपजातिवृत्तम् ॥

हिन्दी—सोंठ, मोथा, बड़ी कटेरी, गिलोय, आंवला इन पांच द्रव्यों का क्वाथ छोटी पीपल का चूर्ण तथा मधु मिलाकर सेवन करने से विषम ज्वर का नाश होता है ॥ ७६ ॥

रसोनकल्कप्रयोग —

**सुरालये वा भुजगालये वा नरालये वा न रसोनकल्कात् ।**
**तैलेन युक्तादपरः प्रयोगो महासमीरे विषमज्वरेऽपि ॥ ७७ ॥**

व्याख्या—सुरालये स्वर्गलोके भुजगालये पाताले नरालये भूलोके अर्थात् लोकत्रयेऽपि वा तैलेन तिलतैलेन युक्ताद् रसोनकल्काद् एकेन रसेन ऊनः रसोनः लशुनः तस्य कल्काद् अपरः द्वितीयः प्रयोगः उपचारः औषधं वा महासमीरे तीव्रवातज्वरे विषमज्वरे वा नास्तीति शेषः । "सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ", एते पञ्चविषमज्वराः । रसोनस्योत्पत्तिः वाग्भटे—

राहोरमृतचौर्येण लूनाद् ये पतिता गलाद् ।
अमृतस्य कणाभूमौ ते रसोनत्वमागताः ॥

यथाह भावमिश्रः —

यदामृतं वैनतेयो जहार सुरसत्तमात् ।
तदा ततोऽपतद् बिन्दुः स रसोनोऽभवद् भुवि ॥
पञ्चभिस्तु रसैर्युक्तो रसेनाम्लेन वर्जितः ।
तस्माद् रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥
एतामेव कथां समर्थयति हारीतः स्वसंहितायाम् ।

कल्कनिर्माणविधि —

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपावापकल्कास्ते तन्मानं कर्षसम्मितम् ॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया ।
सितागुडौ समौ देयौ द्रवा देयाश्चतुर्गुणाः ॥ शार्ङ्गधरे ।

भैषज्यरत्नावल्याम्—

रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्तः ।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥

एष एव योगोऽविकलरूपेण चक्रदत्तेऽपि दृश्यते । उपजातिवृत्तम् ।

हिन्दी—स्वर्ग, पाताल तथा भूतल अर्थात् तीनों लोकों में तीव्र ज्वर एवं विषम ज्वर को शान्त करने के लिये तिल तैल मिश्रित लहसुन की चटनी के निरन्तर सेवन के अतिरिक्त दूसरा कोई सफल प्रयोग है ही नहीं।

विशेष—सूखे अमचूर को पानी के साथ पीसकर कच्चे आम इमली को यों ही पीसकर आवश्यक प्रक्षेपों को डालकर जैसे चटनी बनाई जाती है वैसे ही औषधोक्त द्रव्यों द्वारा कल्क=चटनी का निर्माण किया जाता है। तीनों लोक में ऐसा प्रभावकारी दूसरा प्रयोग नहीं है यह कहना ग्रन्थकर्त्ता की स्वानुभूति के प्रति गर्वोक्ति है ॥ ७७ ॥

विषमज्वरे योगचतुष्टयम्—

**क्षौद्रेण पथ्या विषमज्वरापहाऽजाजी गुडाढ्या विषमज्वरापहा ।**
**कृष्णैधमाना विषमज्वरापहा श्रेष्ठा गुडाढ्या विषमज्वरापहा ॥ ७८ ॥**

व्याख्या—क्षौद्रेण मधुना सेविता पथ्या हरीतकी विषमज्वरापहा विषमज्वर ज्वरान् वा अपहन्ति। अजाजी कृष्णजीरक गुडेन सहिता तदेव कार्यं करोति। कृष्णैधमाना वर्धमानपिप्पली विषमज्वरं नाशयति। गुडाढ्या गुडप्रधाना श्रेष्ठा विशेषगुणप्रदायिनी पिप्पली विषमज्वरापहा भवति। चरके वर्धमानपिप्पलीप्रयोग —

क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम्। वर्धयेद् पयसा सार्धं तथा चापनयेत् पुनः ॥
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा। पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥
पिष्टास्ता बलिभिः सेव्या शृता मध्यबलैर्नरैः। शीतीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्तितः। प्रयोगो यस्त्रिपर्यन्तः स कनीयान् स चानले ॥
च० चि० अ० १ ॥

त्रिवृद्धया पञ्चवृद्धया वा सप्तवृद्धयाऽथवा पुनः ॥ इत्यामनन्ति।

अन्ये तु—

उपरि लिखिता एकश्लोकसमापनाश्चत्वारो योगा विषमज्वरान् शमयन्ति। इन्द्रवंशावृत्तम्।

हिन्दी—मधु के साथ हरीतकी का सेवन, गुड़ के साथ कालाजीरा का सेवन, वर्धमान पिप्पली का प्रयोग अथवा गुड़ के साथ पिप्पली का सेवन विषम ज्वरों का विनाश करता है। इस एक ही श्लोक में पृथक्-पृथक् चार योगों का वर्णन है ॥ ७८ ॥

विषमज्वरे पटोलादिक्वाथ —

**प्रवालतुलिताधरे कुचकुलाचलालङ्कृते**
**विशालजघनस्थले चटुलचारुचेलाञ्चले ।**
**पटोलकटुरोहिणी-मधुकचेतकीमुस्तकैः**
**कषायक उदाहृतो विषमशान्तये सूरिभिः ॥ ७९ ॥**

व्याख्या—प्रवालतुलिताधरे प्रवाल नवदल तेन तुलितम् अधरपल्लव यस्या सा

तत्सम्बुद्धौ, कुचकुलाचलाऽलङ्कृते कुचौ एव कुलाचलौ महोन्नतपर्वतौ ताभ्यामलङ्कृते सुशोभिते, अत्र कुचयो पीनोन्नतत्वात् कुलाचलप्रयोगो विहित तथथा—

महेन्द्रो मलय सह्य शुक्तिमान् ऋक्षपर्वत । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वता ॥

विशालजघनस्थले विशाले विपुले जघने स्त्रीकट्या पुरोभागौ यस्या सा तत्सम्बुद्धौ चटुलचारुचेलाञ्चले चटुल चञ्चल च तत् चारु सुन्दर च तत् चेलाञ्चल शाटिकाप्रान्तभागो यस्या सा तत्सम्बुद्धौ, इत्थभूते हे प्रियतमे ! पटोल कुलक कटुरोहिणी कट्वी मधुको गुडपुष्प, चेतकी हरीतकीभेद मुस्तक मुस्ता पञ्चभिरेभिर्द्रव्यै कृत कषाय कुशलैश्चिकित्सकैर्विषमज्वरशान्तये निर्दिष्ट, इति ग्रन्थकर्तुराशय । पृथ्वीवृत्तम् ।

हरीतकीभेदा —

विजया रोहिणी चैव पूतना चामृताऽभया । जीवन्ती चेतकी चेति विज्ञेया सप्तजातय ॥

चेत।या उत्पत्तिस्थान हिमालय आकृति त्रिरेखा चेतकी ज्ञेया । भा० प्र० ।

**हिन्दी—नवकिसलय के सदृश होंठों से युक्त, पीन एवं उन्नत स्तनों से सुशोभित विशाल जाघों और सुन्दर आंचलवाली प्रियतमे ! परवल, कुटकी, महुआ, चेतकी नामक हरड, नागरमोथा इन पाच द्रव्यों से वना हुआ क्वाथ विषमज्वर का विनाश करता है। यह विद्वान् चिकित्सकों का मत है ॥ ७९ ॥**

विषमज्वरनाशनो योग —

**यो भजेत् समधुश्यामां श्यामामिव मनोहराम् ।**
**विषमेषुव्यथास्तस्य न भवन्ति कदाचन ॥ ८० ॥**

व्याख्या—य विषमज्वरी श्यामा षोडशवार्षिकी स्त्री तद्वद् मनोहरा रोगनाशकत्वात् प्रिया श्यामा पिप्पलीं मधुना सह भजेत सेवेत तस्य विषमेषु विषमज्वरेषु व्यथा पीडा कदाचन कदापि न भवन्ति । अथवा य मधुना माक्षिकेण सह श्यामा त्रिवृता भजेत् सोऽपि विषमज्वरेभ्यो मुक्तो भवति । इति द्वितीयोऽर्थ । अथ श्लेषानुप्राणितस्तृतीयोऽर्थ य कामपीडित समधुश्यामा मधुना मद्येन सह श्यामा षोडशवार्षिकी कामिनीं भजेत् तस्य विषमेषु-काम तस्य व्यथा पीडा न भवन्तीति । श्यामाया लक्षणानि—

स्निग्धनखनयनदशना निरनुशया मानिनी स्थिरस्नेहा ।
सुस्पर्शा शिशिरमासलवरागना सा मता श्यामा ॥

अत्र पद्ये विषमज्वरचिकित्सया सहैव कामज्वरस्यापि चिकित्सा ग्रन्थकर्त्रा श्लेषमुखेन निर्दिष्टा । अनुष्टुप्छन्द ।

**हिन्दी—नवोढा नायिका के समान सुखद मधु युक्त निशोथ का अथवा मधु युक्त पिप्पली का सेवन करने से विषम ज्वरों का शमन होता है। अथवा कामज्वर पीड़ित रोगी यदि नवोढा नायिका का सेवन ( आलिङ्गन ) करता है तो उसका ज्वर शान्त हो जाता ॥ ८० ॥**

तण्डुलीयमूलधारणप्रयोग —

**क्षणमपि चलतां जहीहि मुग्धे शृणु वचनं मम तन्वि सावधाना।**
**वसति शिरसि मेघनादमूले व्रजतितरां विषमो विशालदृष्टे!॥ ८१॥**

व्याख्या—हे मुग्धे! उद्यद्यौवने अर्थात् चञ्चले क्षणमपि स्तोकमपि चञ्चलता चाञ्चल्य जहीहि मन्त्यज, हे तन्वि! कृशोदरि सावधाना दत्तचित्ता सती मम मदीयमेतदुच्यमान वचन वाक्य शृणु आकर्णय मेघनादमूले तण्डुलीयकमूले शिरसि शिखाया वसति वद्धे सति हे विशालदृष्टे! विशाला विस्तृता दृष्टि यस्या सा तत्सम्बुद्धौ विषमो विषमज्वरो व्रजतितरान् अतिशयेन गच्छतीति भाव। रलङ्कलाया विशालदृष्टिता सौन्दर्यापादकत्वे सति शास्त्रज्ञत्वमपि व्यनक्ति। तत्र विशाला व्यापका शास्त्रान्तरसञ्चारिणीत्यभिप्राय। पुष्पिताग्रावृत्तम्।

हिन्दी—हे मुग्ध स्वभाव वाली प्रिये! थोड़ी देर चञ्चलता छोड़ो, हे कृशोदरि! सावधान होकर मेरी बात सुनो, हे हरिणाक्षि! चौलाई की जड़ को शिर में बाधने से विषम ज्वर का नाश हो जाता है॥ ८१॥

विषमज्वरे कषाय —

**विषममपहरत्यसौ कषायो मधु मधुको मधुरामृताशिवानाम्।**
**अहमिव तव कामिनि प्रकोपं चरणसरोरुहयोर्लुठन् हठेन॥८२॥**

व्याख्या—हे कामिनि प्रियतमे! यथा अह हठेन बलात्कारेण तव चरणसरोरुहयोर्लुठन् तव चरणकमलयो पतन् मन् प्रकोप हरामि, अनेन पादपतनेन गुरुमानिन्या अपि क्रोधोपशम इति प्रसिद्धि कामशास्त्रेषु। तद्वद् असौ मधुक मधुयष्टी मधुरा शर्करा अमृता गुडूची शिवा आमलकी एतेषा मधुमधुरो मधुना मधुरीकृत कषाय विषम विषमाऽऽख्य ज्वरन अपहरति विनाशयतीत्यर्थ। पुष्पिताग्रावृत्तम्।

हिन्दी—हे प्रिये! मेरी बात सुनो! मुलेठी, चीनी, गिलोय, आंवला इन चारों का क्वाथ मधु मिलाकर पीने से उस प्रकार विषम ज्वर को शान्त करता है जिस प्रकार तुम्हारे अत्यन्त क्रुद्ध हो जाने पर मैं चरणों में गिरकर हठपूर्वक तुम्हारे क्रोध को शान्त कर लेता हूँ॥ ८२॥

विषमज्वरनाशनोऽपर कषाय —

**हे मुग्धे सलिलधरामृताशिवानां सप्ताहं पिब मधुसंयुतं कषायम्।**
**भो कान्ते तव विषमज्वरापनोदादत्यन्तं तनुलतिका प्रहर्षिणी स्यात्॥**

व्याख्या—हे मुग्धे! प्रियतमे सलिलधर तोयभृत् मुस्ता, अमृता गुडूची शिवा आमलकी एषा त्रयाणा मधुसयुत मधुना मिलित मधुरीकृत कषाय सप्ताह सप्तदिन यावत् पिब। भो कान्ते! रूपसौन्दर्यशालिनि! विषमज्वरापनोदात् विषमज्वरदूरीकरणाद् अनेन कषायेण अत्यन्तम् अत्यधिक तव तनुलतिका अङ्गयष्टि प्रहर्षिणी प्रमोदातिशययुक्ता

स्यात् । यथाह वाग्भट अष्टाङ्गहृदये—"धात्री मुस्ताऽमृताक्षौद्रमर्धश्लोकसमापना ।" अ० चि० अ० १ । प्रहर्षिणी वृत्तम् ।

हिन्दी—हे मुग्धे ! नागरमोथा, गिलोय, आंवला इन तीनों का मधु मिश्रित क्वाथ एक सप्ताह तक पीना चाहिये । हे प्रिये ! इस क्वाथ के सेवन से विषम ज्वर दूर होकर तुम्हारा शरीर प्रसन्न रहे ॥ ८३ ॥

ज्वरहरम् अष्टाङ्गधूपनम्—

अयि कुशाननतीक्ष्णमते मते मतिमतामतिमन्मथमन्थरे ।
ज्वरहरं रुगरिष्टशिवावचायवहविर्जतुसर्षपधूपनम् ॥ ८४ ॥

व्याख्या—अयीतिस्नेहपूर्वकं सम्बोधनम् , कुशाननतीक्ष्णमते कुशस्य दर्भस्य आननं मुखमिव तीक्ष्णा जानव्युत्पन्ना मतिर्यस्याः सा तत्सम्बोधने, मतिमतां बुद्धिमतां मते पूजिते, अतिमन्मथमन्थरे प्रवृद्धकामवशान्मन्दगतियुक्ते एतदधोलिखितमष्टाङ्गधूपनम् ज्वरं नाशयतीत्यर्थः । रुक् कुष्ठम् अरिष्टं निम्बं शिवा आमलकी वचा गोलोमी यव सक्तु इन्द्रयवो वा हविः घृत जतु लाक्षा सर्षप गौरसर्षप इत्यष्टौ धूपनानि; यथाह चक्रपाणि —
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी । सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ चक्रदत्ते ॥ द्रुतविलम्बितवृत्तम् ।

हिन्दी—हे कुशाग्र बुद्धि वाली विद्वानों के द्वारा सम्मानित, यौवन के उन्माद से मन्दगति वाली प्रिये ! कूठ, नीम के पत्ते, आंवला, वच, जौ, अथवा इन्द्रजौ, घी, लाख और पीली सरसों इनका धूप देने से ज्वर शान्त हो जाता है ॥ ८४ ॥

सततकज्वरं तिक्तादिकषाय —

तिक्तोशीरबलाधान्यपर्पटाम्भोधरैः कृतः ।
क्वाथः पुनः समायातं ज्वरं शीघ्रं निवारयेत् ॥ ८५ ॥

व्याख्या—तिक्ता कुटकी उशीरं नलदं बला वाट्यालकः धान्यं धन्याकं पर्पटं वरतिक्तं अम्भोधरं मुस्ता षड्भिर्द्रव्यैः कृतः कषायः पुनः समायातम् एकस्मिन्नेव दिने वारद्वयम्, आगच्छन्तं सततारूयं ज्वरं शीघ्रं निवारयेत् । अनुष्टुप्छन्दः ।

हिन्दी—कुटकी, खस, बला, धनिया, पितपापड़ा, नागरमोथा इन छः द्रव्यों के द्वारा निर्मित कषाय एक ही दिन में दो बार आने वाले सततक ज्वर का नाश करता है । यह सततक नामक विषम ज्वरनाशक उत्तम योग है ॥ ८५ ॥

लाक्षादि तैलम्—

रास्नामूर्वामधुकरजनीकुष्ठशीताश्वगन्धा-
कौन्तीतिक्तामिशिसुरघनैस्तुल्यभागैः समस्तम् ।
तैलं लाक्षारसपरिमितं गर्भिणीनां प्रशस्तं
भूतोन्मादज्वरपवनजिद् यक्षरक्षःक्षयघ्नम् ॥ ८६ ॥

